दक्षिणभागोऽप्यवाच्याः केचन, मध्यभागे त्वरण्यभूमय एवेत्युक्तमिह नीच्यानामपाच्यानामिति। इहैवान्यत्र श्रूयते "प्रत्यञ्चि दीर्घारण्यानि भवन्ति"–इति (३. ४. ६.), "प्रतीच्योऽप्यापो बह्वाः स्यन्दन्ते"–इति (१. २. १.) च।

उदीच्यां तु हिमवत्पृष्ठदण्डस्योत्तरे भागे आर्यावर्त्ताद् बहिर्विद्यमानावपि आर्यमिश्रजनपदाविमौ उत्तरमद्राः उत्तरकुरवश्चेति श्रूयेते। एवं हि गम्यते— यथैव हिमवतो दक्षिणभूभागोऽयमार्यावर्त्तो मद्रदेश–कुरुदेशाख्या आसीत्तदानीं द्विधा विभक्तः, तथैव हिमवत उत्तरभूभागश्च स मद्रदेश-कुरुदेशाख्या आसीत् पुरा द्विधैव विभक्त इति। आर्य्यावर्त्तीयमद्रदेशादुत्तर इति उत्तरमद्र इत्युच्यते सः, आर्य्यावर्त्तीयकुरुदेशादुत्तर इति उत्तरकुरुश्चेति। आर्य्यावर्त्तीयप्रत्यन्तदेशेभ्यः परस्तात् ये देशा महादेशा वा सन्ति, न तेषु मन्वाद्युक्तार्य्यनार्य्यनामादिसम्बन्ध इत्युक्तं पुरस्तात् (१७ पृ० ११ पं०), तथा च तद्देशवासिनामार्य्यत्वमनार्य्यत्वं वा नैव विचार्य्यमस्ति; परमुत्तरकुरुदेशस्य नैसर्गिकसौन्दर्य्यस्वास्थ्यकरत्वादितः, तद्देशवासिनाञ्च शान्तिप्रियत्व-तपःपरायणत्वादिदैवस्वभावदर्शनात्, पुण्यमयत्वं देवक्षेत्रत्वमजेयत्वञ्च। तथाह्यैतरेयकम्— "देवक्षेत्रं वै तत्र चैतन्मर्त्त्यो जेतु मर्हति"–इति (८. ४. ८.)। तेषां शान्तिप्रियत्वादिस्वभाव, एवाजेयत्वे हेतुः प्रबलः। तदुक्तं महाभारतीय-सभापर्वणि पार्जुनदिग्विजये—

"तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम्। ऋषिकुल्यास्तथा सर्वान् ददर्श कुरुनन्दनः॥ × × ×॥ तत एवं महावीर्य्यं महाकाया महाबलाः। द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन्॥ पार्थ! नेदं त्वया शक्यं पुरं जेतुं कथञ्चन। उपा-

वर्त्तस्व कल्याण पर्य्याप्त मिद मच्युत ॥ × × × ॥ न चापि किञ्चिज्जेतव्य मर्जुनात्र प्रदृश्यते। उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्त्तते ॥ × × × ॥ अथेह पुरुषव्याघ्र! किञ्चिदन्यच्चिकीर्षसि। तत् प्रब्रूहि करिष्यामो वचनात् तव भारत ॥ ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव। पार्थिवत्वं चिकीर्षामि धर्म्मराजस्य धीमतः ॥ न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मन्यसे। युधिष्ठिराय यत् किञ्चित् करपण्यं प्रदीयताम् ॥ ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च। क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम्”–इति २८ अ० ४–१६ श्लो०। तदिदं महानगरं सम्प्रति तोब्वदिल्युच्यते, स्वोल्वशदिति तदर्थः; एतद्देशीया हि प्रायश स्थूलनासिकोदरजङ्घा भवन्ति।

अस्ति चान्यः कुरुवर्षः; स नूनं मेरुसन्निहः, ‘याम्लपिल्वर्ग’-प्रभृति-‘सुबोर्य्य’-देशान्तः, योऽद्य मद्यतन-सेण्टपिटर्सबर्गादिमाई-वोरियान्तः। तस्य स्वर्गत्वेन वर्णनञ्च महाभारतरामायणादौ बहुत्र। तद्यथा महाभारतीयानुशासनपर्व्वणि—“षष्ठो सह शरीरेण प्राप्तोऽस्मि परमां गतिम्। उत्तरान् वा कुरून् पुण्यानथ-वाप्यमरावतीम्”–इति (५४.१६)। पुनस्तत्रैव—“नैवेशिकं सर्व्व-गुणोपपन्नं ददाति वै यस्तु नरो द्विजाय। स्वाध्यायचारित्र-गुणान्विताय तस्यापि लोकाः कुरुपूत्तरेषु”–इति (५७. ३२.)।

अथ यदिह ‘मध्यमायां दिशि’–इति, ततो गम्यते कुरुपञ्चालादयस्तत्र एवैते प्रदेशा स्तदानी मासन् मध्यदेशाः, आर्य्यावर्त्तस्य मध्यभूमागा इति यावत्। तत्र च यच्छ्रुतो वशो-शीनरः, स एव स्यात् महाभारतादिप्रसिद्धः ‘शिविः’। किञ्च य एते ‘ध्रुवायां प्रतिष्ठायाम्’ इति द्वे पदे तद्विशेषणे श्रूयेते, ततो

ज्ञायते चात्रैव मध्यार्यावर्त्ते तदानीन्तनसम्राजामासीद्राजधानीति। एवञ्च कुरु-पञ्चाल-शिवि-सौवीरप्रदेशात्मकमध्यदेशत एवात्र प्राच्यादयो दिशोऽभीष्टा इत्यपि नानवगतम्॥

तदेवं ऐतरेयकाले हिमवद्दक्षिणपार्श्वनिम्नस्थं किरातजातिनिकेतनं किरातनगर मेवासीत् आर्यावर्त्तस्यास्य पूर्वप्रत्यन्तः, दक्षिणस्यां भरतवंशीयाधिकृतं सत्वद्राज्य मप्यासीदार्यावर्त्तान्तर्गतम्, पश्चिमस्यां गिरिगिरिनदीग्रामसीमानां प्राचुर्यवर्णनात् गान्धारदेशादिभ्यः परस्तादप्यासीदार्यवास इति गम्यते, उत्तरस्यान्तूत्तरकुरूणा मजेयत्वेन वर्णनात् ततोऽर्वागेवासीदार्यावर्त्तोत्तरसीमेति च प्रतीयत एवेति। एकत्र चात्र श्रुतम्—"त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्तीति" (७. ३. ६.)। तत्र 'एते'—इति इदंशब्दव्यवहारादैतरेयकालेऽप्यासन्निमा जातय इति, 'उदन्त्याः'—इत्युक्ते प्रत्यन्तवासिनोऽनार्या इति च गम्यते। तथाचैषां देशाना मनार्यभूत्वाभिधानादेषा मन्तःस्थिताः प्रदेशा एवासन् तदानी मार्यभूमय इति सुवचम्। अन्ध्रजातयोऽधुना दाक्षिणात्येषु प्रसिद्धा, पुण्ड्र इति त्विदानीं 'दीनाजपुर'—इति प्रत्नतत्त्वानुसन्धित्सवो वदन्ति, एवं शबरपुलिन्दमूतिबाः विन्ध्यगिरिवासिनो म्लेच्छजातिविशेषास्त्वद्यापि प्रायः प्रसिद्धा एव। तदेवं न तदाप्येष आर्यावर्त्तः प्राच्या मतिविस्तृत इत्येवास्माकम्॥

अथ श्रूयते ह्येतद् विदेघमाथवाख्यानं शतपथे १ का० ४ प्र० ३ ब्रा० १०—१९ क० "विदेघो ह माथवोऽग्निं वैश्वानरं मुखे बभार ०—० स इमाः सर्वा नदीरति ददाह सदानीरेत्युत्तराद् गिरेर्निर्धावति ताए हैव नातिददाह, ताए ह स्म तां पुरा ब्राह्मणा न तरन्त्यनतिदग्धाग्निना वैश्वानरेणेति। तत एतर्हि प्राचीनं बहवो

ब्राह्मणास्तद्धाचेत्तर मिवास स्रावितर मिवास्वदित मग्निर्वा वैश्वानरेणेति। तदु हैतर्हि चेत्तर मिव०—० सैषाप्येतर्हि कोसलविदेहानां मर्यादा, ते हि माथवा: ०—० स मे मुखान्निर-पादीति"–इति। एतस्मादाख्यानात् व्यक्त मभिगम्यते, विदेहनाम-मैथिलजनपदस्यानतिप्राचीनार्यभूत्वम्। परं न तदापि दक्षिण-मगधस्यार्यावर्त्तत्वं सम्यक् मन्यामहे वयम्; अनतिप्राचीनपातञ्जलमहाभाष्यवर्णितार्यावर्त्तलक्षणतोऽपि दक्षिणमगधात् प्रत्यगेवार्यावर्त्तप्रतीतेः। अपीह शतपथे (१२. ८. ३. ३:) "वह्लिकः प्रातिपीय शुश्राव"–इति श्रवणात्, तदाप्यासीद् बाह्लीकस्यार्यावर्त्तत्व मिति च स्वीकार्यम्॥

पाणिन्यागमेऽपि भायुधजीविवाचिपर्श्वादिगणे पठितो बह्लीकः (पा० सू० ५. ३. ११७.)। "काम्बोजाल्लुक्"–इति (पा० सू० ४. १. १७५.) काम्बोजग्रहणञ्च दृश्यते। तत्र सिन्ध्वादिगणेऽपि पठितः कम्बोजः (पा० सू० ४. ३. ९३.)। गणपाठोऽपि पाणिनिनैव कृत इति सिद्धान्तितं भगवता पतञ्जलिना (१. १. ३४)। महाभारतेऽपि वर्णितौ काम्बोजबाह्लीकौ (द्रो० प० ११०, १५५ अ०)।

अथ भगवता यास्केनापि "कम्बोजाः कम्बलभोजाः कमनीयभोजा वा; कम्बल. कमनीयो भवति"–इति कम्बोजशब्दो निरुक्तः (२. १. ४.)। "प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु"–इत्याद्युक्त्वा तदुदाहरणाय प्रोक्तं चैतत्—"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते०—० विकार मस्यार्येषु भाषन्ते शव इति; दातिर्लवनार्थे प्राच्येषु, दात्र मुदीच्येषु"–इति (२. १. ३, ४.)। पातञ्जले महाभाष्ये पस्पशाया मप्येव मेव।

अपि तत्र आर्यावर्त्तस्यास्य चतुस्सीमनिरूपणं सत्तं सुव्यक्तम्। तथाहि—"कः पुनरार्यावर्तः? प्रागादर्शात्, प्रत्यक् कालकवनात्, दक्षिणेन हिमवन्तम्, उत्तरेण पारियात्रम्"—इति २. ४. १० सू० भा०। अत्राह तट्टीकाकारः कैय्यटः—"आदर्शादयः पर्वत-विशेषाः"—इत्येव। "जनपदतदवध्योश्च (पा० सू० ४. २. १२५.)" —इतिसूत्रस्योदाहरणभूतं यदिदं आदर्शक इति पदं लभ्यते, इतोऽपि ज्ञायते अस्यादर्शनाम्ना कश्चित् सीमपर्वत इति। सोऽयं आदर्शः स्यादञ्जनपर्वतः; तत्पदनिरुक्तिस्तथैवावगतेः। स चेदानीं सुलेमानित्युच्यते। स हि शतपथब्राह्मणश्रुतश्वेतगिरेरेव दक्षिणांशः। एवञ्च पतञ्जलिकालेऽपि स एव श्वेतगिरिरेवासीदार्यावर्तस्य पश्चिमसीमेत्यनुमानमपि न स्यादसङ्गतम्। तदानीन्तनार्यावर्तस्य पूर्वसीमभूतं कालकवनं तु स्यात् धर्मारण्यतः प्राग्विद्यमानं दक्षिणमगधस्य प्रत्यक् स्थितं वकासुर-(बक्सर)-प्रदेशीयं ताड़कावनम्। पुरासीत् तद्धि कालयवनाश्रितम्; तत्प्रभृत्येव तस्य कालवनं कालकवनं वेति च नाम सम्पन्नम्। हरिवंशोल्लिखितस्य विष्णुपुराणोक्तस्य च (५. २३. ५.) तस्य कालयवनस्य मगध-राजजरासिन्धुमित्रत्वेन वर्णनात् कालवनमगधयोः सामीप्यानुमानं स्याच्च सङ्गतम्। अत एव प्राच्यमगधस्य अनार्यवासत्वेनोल्लेखोऽपि सम्यैतस्य पतञ्जलेः सङ्गच्छते। तथाहि—"शवतिः सुराष्ट्रेषु, रंहतिः प्राच्यमगधेषु; गमि मेव त्वार्याः प्रयुञ्जते"—इति (म० भा० पस्पशा०)। तदेवं तदापि सौराष्ट्रजनपदस्य, तथेदानीं पटनेत्यादिप्रसिद्धानां प्राच्यमगधीयकुसुमपुरादीनाञ्च आर्यावर्त्तसीमतो बहिः स्थितिरासीदित्यत्र च नास्ति संशयलेशोऽपीति।

अथात्र भगवान् मनुरप्याह— "आ समुद्रात्तु वै पूर्वादा समुद्राच्च पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधाः" —इति ( २, २२. )। 'तयोः गिर्योः' पूर्वोक्तयोः हिमवद्विन्ध्ययोः। तदित्थं पूर्वापरसमुद्रव्याप्येव देशो मनोः सम्मतः। तत्र पूर्वः स्यात् सिन्धुसागरसङ्गमः, अपरस्तु गङ्गासागरसङ्गमः। स एष आर्यावर्त्तः ब्रह्मावर्त्त प्रदेशो ब्रह्मर्षिदेशो मध्यदेशो यज्ञिय देशश्चेति चतुर्विधत्वेन वर्णितस्तेन तत्प्रान्तभूमीनां म्लेच्छभूत्व मुररीकृतञ्च। तथ्था—

"सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।
तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते॥
कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः शूरसेनकाः।
एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरः॥
हिमवद्विन्ध्ययोर्मध्यं यत् प्राग् विनशनादपि।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तितः॥
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।
स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः"—इति
( म० २अ० १७, १९, २१, २३श्लो० )।

अत्र हि ब्रह्मावर्त्त-ब्रह्मर्षि-मध्यदेशास्तु 'यज्ञियाः' यज्ञकार्योर्हभूमय एव, तत्र नास्ति विचारणा; निर्द्दिष्टेभ्य एभ्यो बहिरपि आर्यावर्तान्तर्गताः सिन्धुसौवीरकाश्मीरादयो देशा अपि यज्ञानुष्ठानार्हभूमय इति 'यज्ञियदेशाः' उच्यन्ते। एतस्मादार्यावर्त्ताद् बहिःस्थिताः "किराता यस्यान्ते, पश्चिमे यवनाः स्मृताः। आन्ध्रा दक्षिणतो वीर! तुरस्कास्त्वपि चोत्तरे"—इति ( वा० पु० १३, ४० ), एवमादिकाः खोरासान-तुरस्क-पूर्ववङ्गोत्तरवङ्गान्ध्रप्रदेशादयोऽस्यार्यावर्त्तस्य प्रान्तभूमयः सर्वा एव म्लेच्छदेशाः; किञ्चार्यावर्त्तान्तर्गता

दक्षिणवङ्गाङ्गप्राच्यमगधादयोऽपि कृष्णसारमृगहीनत्वेनायज्ञियत्वात् म्लेच्छदेशा एव।

तत्त्वतस्तु "तयोरेवान्तरं गिर्योः"—इति मनूक्तेः पूर्वस्यां यावदेव विन्ध्यगिरेः प्रसृतिस्तावदेव यज्ञिय आर्यावर्त्त स्वीकार्यः, ततो बहिरार्यावर्त्तत्वेऽपि न त्वस्ति यज्ञियत्व मिति म्लेच्छभूत्व मेव। अत एवाङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च गमननिषेधः सङ्गच्छते; सूचितश्चैतत्तत्र मनुनैव "एतान् द्विजातयो देशान् संश्रयेरन् प्रयत्नतः"—इति (२. २४.)। 'एतान्' ब्रह्मावर्त्तादीनित्यर्थः। तथेषु देशेषु पुरा नासन् ब्राह्मणा इति प्रवादोऽप्युपपद्येत। एतर्ह्यपि प्राच्यमगधेषु पटनाप्रभृतिषु, अङ्गप्रदेशेषु भागलपुरादिषु चान्यत आगताः शाकलद्वीपिब्राह्मणाः, तथा वङ्गेष्वत्र कान्यकुब्जादागता एव ब्राह्मण राढि-वारेन्द्र-वैदिका इति ख्याता वसन्ति, कलिङ्गसौराष्ट्रीयैरपि तथैव।

कलिङ्गप्रदेशागम्यत्वं तु पाणिनिसूत्रे तद्वार्त्तिकतन्महाभाष्येभ्यश्चावगम्यते। तथाहि— अस्ति पाणिनेरेकं सूत्रं "परोक्षे लिट्"—इति (३. २. ११५), अत्र चास्ति कात्यायनवार्त्तिकमिदम्— "अत्यन्तापह्नवे च"—इति, लिट् वक्तव्य इति शेषः, उदाहरणञ्चास्य दर्शितं पतञ्जलिना— "नो कलिङ्गान् जगाम"—इति विहृतं च तत् कैयटेन— "न केवलं तद्देशस्य भोजनादेरपह्नवो यावत् तद्देशगमनादेरपि"—इत्यादि। एष च कलिङ्गप्रदेशोऽप्यार्यावर्त्ताद्बहिरेव संस्थितो मेदिनीपुरादारभ्य तैलङ्गदेशान्तं यावद्विस्तृतः। पुरा आसीदयं मुत्कलिङ्ग-मध्यकलिङ्ग-कलिङ्गेति त्रिधा विभक्त इति त्रिकलिङ्गनामा। तैलिङ्गनाम तु तत एव समुद्भूतम्, अप्युत्कलिङ्गस्य एवोत्कलनामप्रसिद्धिरित्याहुरैतिह्य-

सिका: । अतएव श्रौतेवे वर्णविचाराभावस्तद्दोषनिवृत्तये योत्तरत्र समये केनचिदुत्कलखण्डप्रणनश्चेति सम्भाव्यते ।

अथामरसिंहोऽपि प्राच्योदिच्यमध्यम्लेच्छेति चतुर्विभक्त मार्यावर्त्तदेशसंस्थान मश्लोकयत् । तद्यथा—"आर्यावर्त्तः पुण्यभूमिर्मध्यं विन्ध्यहिमालयोः"—इति (२. १. ८.)। तत्र "प्रत्यन्तो म्लेच्छदेशः स्यान्मध्यदेशस्तु मध्यमः इति (२. १. ६, ७.)। प्राक्सहितो दक्षिणो देशः 'प्रागुदक्षिणः', एवं पश्चिमसहित उत्तरदेशः 'पश्चिमोत्तरः', अन्तं प्रति गतः 'प्रत्यन्तः' सीमान्तप्रदेशः ॥

अथात्र युरोपीयभ्रातरः केचन समवदन्ते । श्रूयते हि ऋक्संहितायाम्—"अस्तु प्रत्नस्योकसो हुवे"—इति (१. ३०. ८.), तेनाधिगम्यते भारतप्रदेशीयार्याणा मादिपुरुषाणां वास आसीत् पुरा क्वचिदन्यत्रेवेति । तत्रार्याणा मादिनिकेतन मस्यैवासियाखण्डस्य मध्यभागस्थितयोर्बेलुरताग्मुस्ताग्पर्वतयोः पश्चिमपार्श्वगताधित्यका भूमिस्तत एव विकीर्णा वयं भारतीयाः पारसिकाः, अर्म्मण्यादयश्च समभवामेति । अत्र ब्रूमः । भारतीयपारसीकशर्म्मण्यादीना मार्य्यमूलत्वेनैकजातिप्रभवत्वन्तु स्यात् स्वीकार्य्यम्, किन्त्विहोपनिवेशिका वय मिति नैव मन्यामहे वयम् ; स्वदेशस्वत्वहान्यादिदोषत्रयप्रसङ्गात्, तेषां तन्मतपोषकप्रमाणहेतुना मतिदौर्बल्याच्च ।

ते त्रयो दोषाः खल्वेते—नेष देशोऽस्माकं पैतृकोऽपि तु यथा भवद्यवनाना मधिकृतोऽद्य चेंलण्डीयानाम्, तथैव पुराऽस्मत्पूर्वपुरुषैरत्रत्यानानार्यान् विजित्य बलाद् गृहीत इति । एतेनास्मिन्

देशेऽस्माकं मूलस्थलं कदापि नास्ति, प्रत्युत यथा पूर्वं यवनानां जयलब्धं स्वत्वं सम्प्रत्यद्य चेंलण्डीयानाम्, तथैवैकदास्माक मपि बभूवेत्येवेति प्रथमो दोषः। तदनु सम्प्रत्यत एवास्माकं यहुदादीना मिवौपनिवेशिकत्व मिति द्वितीयो दोषः। स्वार्थानुरोधतः स्वावासकण्टकभूतानां मतद्देशीयमूलस्वत्ववता मनार्याणा मुच्छेदनं चेति तृतीयः। यदि हि तेषां तन्मतं मस्माक मत मित्यभिमतं स्यात्, तर्हि ते त्रयोऽपि दोषा गलेकुठारन्यायेन मन्तव्या एव स्युः। न च तथा। प्रत्युत दृश्यते हि न कश्चित् स्वावासभूमिवंतुरङ्गल-भूमिस्वत्व मपि त्यक्तु मुत्सहते, तदद्य मिवार्यावर्तं चिर मास्टे-निवसन्तोऽपि तद्विरुद्धप्रबलप्रमाण मन्तरेव कथङ्कारं नाम पैतृकं स्वत्व मुत्सृजन्तोऽत्र दोषभावं भजामहे ? अपि राजशासनतोऽस्माभा-वादितो विद्युतायाक्ष नलपासन्ताडनादितो वा ये केचनार्या एतार्यास्स्वदेशाद् बहिर्भूता औपनिवेशिकत्व मापन्ना आपद्यन्ते वाद्यापि, अस्तु तेषां तथात्व मदोषाय; अतथाविधाना मस्माकं विषये तेषां तथाविधजल्पनं कथं न नो हृदयं व्यथयेत् ? एवं दुर्बलानां माधुनार्याणां प्रायादिसम्मोहनेनैवाक्रूरपूर्वपुरुषा इह वासस्थानं मातृभिर् इत्यनृत मपि यथूतायेत, तर्ह्यपि तत्कलङ्कप्रवादः कथं न भवेद् दोषायेति च हृदयवद्भिः सुधीभिरेव विवेचनीयम्॥

सन्ति चात्र तेषां तन्मतपोषका येऽष्टावनुमानहेतवो लिखिताः, न तेष्वेकोऽपि विचारसह इत्यस्माकम्। तद्यथा —

(१) 'एशियाखण्डतः प्रोषिता एवार्याः कालेन सर्वत्र यूरोप-खण्डादौ 'बभूवुः कृतवासाश्च्या'—इत्येव मस्त्येकः प्रवादः, यतोऽव-गम्यते नून मासीदार्याणा मादिवासः प्रथम मेशियाखण्डमध्य-भाग एवेति तेषां तथाविधानुमानस्याद्यहेतुवर्णनम्। अत्र ब्रूमः—

आगत्तुं स प्रवादस्तेन किम्, तथा स्वीकारेऽपि न भवेदस्मार्क भूस्खलनाशः, आर्यावर्त्तस्यास्य वैशिष्ट्याखण्डीयभूभागत्वात्; निरवसिताश्चास्माद् विश्वामित्रर्षिपुत्रादयः। तथाहि—"त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः"–इति ( ऐ० ब्रा० ७, ३, ६. )। अतएव खगदोषदुष्टा भर्तृ परित्यक्ता ऋषिसुता विदुष्यपालेव ग्रीकदेशीया-ऽपेलो देवतेति सम्भाव्यते। तदत्र ऋ० सं० ८, ९१ सूक्त-व्याख्यानपरं शाट्यायनब्राह्मणं द्रष्टव्यम्।

(२) भारतीयपारसिकैलण्डीयादीनां विभिन्नजातित्वेऽपि भाषासौसादृश्यं दरीदृश्यते, विशेषतः सर्वास्वेव भाषासु शीतर्त्तुनामैकविधमेव प्रायः, तस्माच्चावगम्यते सर्वेषामेवैषामेकवंश-प्रभवत्वं शीतप्रधानवासित्वञ्चेति तेषां तादृशानुमानप्रवृत्ते र्द्वितीय-हेतुवर्णनम्। अत्र ब्रूमः—अस्त्वेषामेकवंशप्रभवत्वम्, अपि स्वीकार्यञ्च स्यात् पुरासीदेषां सर्वेषामेव हिमप्रधानैकदेशवासित्वञ्च, तेन किम्? शीतप्रधाने तस्मिन् सुवासुमदेशे हि तेषां मूल-सर्वजातिमूलार्याणां वासस्वीकारेऽपि किं मेनचोपपद्यते? उप-पद्यत इति चेत् क्वतं कल्पनाकल्पितजल्पनयेति। अपि पार-सिकावेस्ताग्रन्थस्य 'वेन्दिदाद्'-प्रकरणीयाद्याध्याये 'हरखइति'-नामकस्यैकस्याभ्युदयशालिनो नगरस्य यद् वर्णनं दृश्यते, तन्नून मेतत्र सारस्वतप्रदेशस्यैव; 'सरस्वती'–शब्दस्यैव हि पारसिक-भाषायां 'हरखइति'–व्यवहारः सर्वसम्मतः, सिद्धान्तितश्च तथा स्वाक् मद्योदयेनापि ( १८६२ खृ. मु. व्या. ५६–५८ पृ० )।

(३) तत्रैव 'अवस्ता'ग्रन्थस्य 'वेन्दिदाद्'-प्रकरणे देशवर्णनप्रसङ्गे 'ऐर्यनम्वेजो'-नामा कश्चिज्जनपदोऽपि वर्णितो दृश्यते। हिमर्त्तु-

प्रधानत्र स इति चोल्लिखितं तत्रैव। स एव जनपदः पारसिकाना मादिवास्तव्यः स्यात्, स्वीक्रियते च तथा तैः पारसिकैः। भारतीयपारसिकयोर्वदनमण्डलसारूप्यात् भाषासादृश्यात्, अग्निपूजकत्वसाम्याच्चैकमूलप्रभवत्वं व्यज्यत एवेति सर्वमूलार्याणा मेवावासभूमिः स्यात् स एव 'ऐर्यनम्वेजो' जनपद इति तत्र तृतीयहेतुवर्णनम्। अत्र ब्रूमः— अस्तु पारसिकाना मार्यवंशसमुत्पन्नत्वेनास्मज्ज्ञातित्वम्, स्याच्च स्वीकार्यं तेषा मादिपुरुषाणा मैर्यनम्वेजोवासित्वम्; न तथाप्यस्माकं तद्देशमूलत्वं भवेदुररीकार्यम्; राजाज्ञादिभिरन्यदेशतो विताडितानां तदादिपुरुषमात्राणां तथात्वसम्भवात्। एकवंशप्रभवाना मपि हि पूर्वपुरुषाणां नानाहेतुतो नानादेशवासित्वं सम्भवत्येव, सम्भवति च तत्र केषाञ्चित् स्वदेशवासित्व मपीति सुवचं भेदं। अपि वा राजतरङ्गिणीवर्णित 'आर्याणक' देश एव 'ऐर्यनम्वेजो'-इति पारसिकनामभागासीत्, स च स्यात् केषाञ्चिदार्याणां वासभूमिः, पारसिकानाञ्चैषां तेभ्य एवोत्पत्तिः स्वीकार्येति सर्व मवदातम्। स च देशः काश्मीरादुत्तरो हिमप्रधानोऽप्यार्यावर्त्तान्तर्गत एव। तथाहि (रा॰ त॰ ४, २६७)—

"तुषारवर्षैर्बहुलैस्तमकाण्डनिपातिभिः।

आर्याणकाभिधे देशे विपन्नं केचिदूचिरे"–इति।

वस्तुतस्तु ऐर्यनम्वेजोनाम नगरं नाद्य क्वचिदपि केनाप्युपलभ्यते, पुरा ह्यासीत् तस्य विद्यमानतेत्यपि नाद्य यावत् सुनिर्णीतम्; तदलं खपुष्पपर्यालोचनयेति।

(४) अस्ति चैव मपि प्रवादः— ग्रीक्-रोमकजाति-पूर्वपुरुषाः पूर्वोत्तरदेगतः प्रोषिता इतात्यादौ न्यवात्सुरिति। स एष प्रवाद-

स्तदेव सङ्गच्छेत, यदि तासामियाखण्डस्य मध्यभूमिरेव तेषा माद्या-र्याणां निकेतनं मन्येतेति तत्र चतुर्थहेतुवर्णनम्। अत्र ब्रूमः— पूर्ववर्णितः ध्रुवास्वादिप्रदेशोऽपीताल्यादिभ्यः किञ्चिदुत्तरगतपूर्व एवेति तत्प्रवादोपपत्तिः समानैवेति ।

(५) हिमालयस्योत्तरभागस्य पवित्रतमत्वेन लोकातीतमहिमा-न्वितत्वेन स्वर्गरूपत्वेन चेदानीन्तनाना मार्याणां स्वीकारात् तादृश-स्थानस्यैतदादिपुरुषाणां वासः सम्भाव्यत इति तत्र पञ्चमहेतुवर्ण-नम्। अत्र ब्रूमः— हिमवद्दक्षिणभागस्था आर्याः तपस्साधनादिकं चिकीर्षवश्चिर मेव हिमवदुत्तरभागं गत्वा तत्तत्कृत्या भवन्ति, इत एव तस्य पवित्रतमत्वेन वर्णनम्; न त्वादिपित्र्यावासनिबन्धन मिति। लोकातीतमहिमान्वितत्वन्तु तत्रत्यतुङ्गत्वा मजेयत्वादिश्रवणत एव। हिमवत्पृष्ठस्य स्वर्गरूपत्वं तु पौराणिकम्; उत्तरशब्दमात्र तद्बीजम्। "उत्तरः—उद्धततरो भवति, अधरः—अधो रः, अधो न धावतीत्यूर्ध्वगतिः प्रतिषिद्धा"—इति यास्कः ( निरु० २. ३. २. )। तथाचोर्ध्वतमप्रदेश एवोत्तरः। आर्यावर्तस्य यस्यां दिशि उन्नत जर्ध्वतनो हिमवान् पर्वतो विद्यते, सैव दिगुत्तरेति व्यपदिश्यते, ततो विपरीता अधरेति। अत एवैवं श्रूयते— "स उत्तरस्मादधरं समुद्र-मपो दिव्या असृजद्वर्ष्या अभि"—इति ( ऋ० सं १०. ९८. ५. )। अत एव स्वर्गोऽप्युत्तर उच्यते। तद्यथा ऋक्संहितायां मस-ष्छ्रुतम्— "विश्वस्मादिन्द्र उत्तरः"—इति ( ऋ० सं० १०. ८६. १–२३. )। एव मन्यत्राप्यत्र च बहुत्र।

(६) श्रूयते हि कौषीतकब्राह्मणे - "उदीच्यां दिशि प्रज्ञात-तरा वागुद्यते, उदञ्च उ एव यन्ति वाचं शिक्षितुं, यो वा तत आगच्छति, तस्य वा शुश्रूषन्त इति ह स्माहैषा हि वाचो दिक्

प्रज्ञाता"–इति (१. ७. ६.)। तदेवं कौषीतकिब्राह्मणग्रन्थ-प्रवक्तुराचार्यस्य हिमवद्दक्षिणखण्डस्थत्वेऽपि तदादिपुरुषाणां हिमवदुत्तरखण्डवासित्वेनैवैषोत्तरदिक्स्तुतिः सङ्गच्छत इति तत्र षष्ठ-हेतुवर्णनम्। अत्र ब्रूमः— ऐतरेये च ब्राह्मणे समाम्नाततद्दर्शिका श्रुतिः; ऐतरेयकाले कुरुपञ्चालशिबिसौवीराणां मध्यदेशत्वं पूर्वं वर्णितम्। मध्यदेशापेक्षयोद्याननगरस्योत्तरत्वं सर्वैरप्यङ्गीकर्तव्यमेव। एष एवोद्यानदेशो राजतरङ्गिण्यां उद्यानक इत्युक्तः; तस्यास्य विद्यानिवासत्वेन स्तुतिरप्यभाणि। स एव काश्मीर-सन्निहित उद्याननामजनपदोऽभीष्टो विद्यानिलय इति कथं धावेम हिमवतोऽप्युत्तरमिति।

(७) श्रूयते हि— "तोकं पुषेम तनयं शतं हिमाः"–इति (ऋ० सं० १. ६. ८४.) आशीर्मन्त्रः। एवमन्यान्योऽपि। तदत्र विवेचनीयम्, एवं हिमर्तोरब्दपरिगणनं तु तत्रैवोपपद्येत, यत्र प्रदेशे हिमप्रपातस्यातिशय्यं विद्यते सदैव, नात्र तथोपलभ्यते; अपि त्वासियामध्यभूभागस्थो बेलुर्तागमुस्तागपर्वतयोरन्तराल-प्रदेशस्तु नूनं तादृश एवेति तत्रैवासीत् पुरार्याणामादिवास इति प्रमाणयितुमवलोऽयं हेतुः सप्तमः। अत्र ब्रूमः— "यदि हिमर्तुवाचिहिमशब्देनाब्दपरिगणनश्रवणात् हिमशब्दस्याब्दवाचि-त्वेन व्यवहाराद्वा स्यादस्मत्पूर्वपुरुषाणां हिमर्तुप्रधानदेशवासित्वानु-मानम्, तर्हि शरदृतुवाचिशरच्छब्देनाब्दपरिगणनश्रवणात् शर-च्छब्दस्याब्दवाचित्वेन व्यवहाराद्वा किं न स्यात् तेषां शरदृतुप्रधान-देशवासित्वानुमानम्? अस्ति तथापि श्रवणं बहुशैव। तद्यथा—

"तिस्रो यदग्ने शरदस्त्वा मिद्"–इति ऋ० सं० १. १२. ७२.।

"शत मिन्नु शरदो अन्ति देवाः"–इति ऋ० सं० १. १४. ६०.।

वचनम्। तदेतत्पर्यालोचनया गम्यते— कदाप्येकदा सम्भूतेऽत्र जलप्लावनेऽस्मादेवार्यावर्तीयसमुद्रादुत्थितस्य जलौघस्य हिमालय-शृङ्गाधिरोहणम्, उपशान्ते च तदुपद्रवे ततः क्रमादभिसर्पणञ्चेत्येवेत्यस्मन्मतानुकूलैवेषा श्रुतिरिति। अत एव 'अतिदुद्राव'-इति पदस्य 'अधिजगाम'-इत्यर्थः कृतस्तद्भाष्यकृता हरिस्वामिना। वेदार्थनिर्णयायैव यास्कप्रणीते निरुक्ते त्वभिपूजितेऽर्थेऽतिशब्दो निर्णीतः— "अति सु इत्यभिपूजितौ"-इति (१. १. ५.)। 'अतिधनः'-इति, 'सुब्राह्मणः'-इति च तदुदाहरणद्वयम्। अति-शयोऽप्यर्थोऽप्यस्त्यतेर्यास्कीयः। अत एव "अतिमृत्युमेति"-इत्यादौ (श्वेता० उ० ६. १५.) अतिशयोऽर्थ एव प्रतीयते, नोल्लङ्घनार्थः। "अतिरतिक्रमणे च"-इति पाणिनिसूत्रस्य (१. ४. ९५.) व्याख्यायां ह्याहैव ज्ञानेन्द्रसरस्वती— "अतिक्रमणं उचितादधिक-स्यानुष्ठानम्"-इति। अथ वा 'तुष्यतु दुर्जनः'-इति न्यायादते-रुल्लङ्घनार्थत्वस्वीकारेऽपि हिमालयोत्तरवासिनां, तेषां दृष्ट्यास्य हिमालयस्य उत्तरगिरित्वं कथं सम्भवेत्? अपि हिमालयोत्तर-प्रदेशेषु आसिया-मध्यभूखण्डेषु न कदाप्यासीत्समुद्रो नैवाद्यापि दृश्यते, तत् कथं शिरो नास्ति शिरोव्यथेतिवत् मतपर्यायार्णवजल-स्फीतिवर्णनं सङ्गच्छतेति च विचार्यमेव। आसीत् पुरोदीच्या-मपि समुद्र इति चेद् देशेषु प्रायः सर्वत्रैव समुद्रोल्लेखकाले तथाविधसमुद्रस्यानुल्लेखः कथङ्कारमुपयुज्यत इति च ध्येयमिति॥

एवं सुमेरुप्रदेशवासिनः खल्वास्मत्पूर्वपुरुषा इति बाल-सिद्धान्तोऽपि स्याद् बालसिद्धान्त एव। तथाहि—

उत्तरकुरुप्रदेश एवास्मत्पूर्वपुरुषाणा मार्याणा मासीद् वास्तव्यभूरिति प्रमापयितुं तेन निष्प्रमाणोऽपि वागाडम्बरो महा-

पन्यस्तः ; तत्र प्रमाणपरतन्त्राणां मौन मेव श्रेयः ; ततो यानि तु श्रुतिवचनादीनि प्रमाणत्वेनोपन्यस्तानि, तत्रेदं प्रथमं मन्यामहे वयम्— "अमी य ऋक्षा निहितास उच्चा,

नक्तं ददृश्रे कुहचिद् दिवेयुः ।

अदब्धानि वरुणस्य व्रतानि,

विचाकशच्चन्द्रमा नक्त मेति ॥"–इति ऋ० १. २४. १० ।

तत्सम्मतोऽस्यार्थः—'अमी' 'ये' 'ऋक्षाः' सप्तर्षयः 'उच्चा' उच्चैः शिरःप्रदेशे 'निहितासः' स्थापिताः, सृष्टिकर्त्रेति शेषः । ते 'नक्त' रात्रौ 'ददृश्रे' दृश्यन्ते 'दिवा' 'कुहचित्' 'ईयुः' गच्छेयुः, न दृश्यन्त इति यावत् । 'चन्द्रमाः' अपि 'नक्तम्' एव 'विचाकशत्' प्रदीप्यमानः 'एति' दृश्यत इति भावः । तदेतदेवमादीनि 'वरुणस्य' राज्ञः 'अदब्धानि' कथमप्यविनाश्यानि 'व्रतानि' कर्माणि, ज्ञेयानीति । एवञ्च शिरःप्रदेशे सप्तर्षिमण्डलावस्थानं गम्यते, तच्च सुमेरावेवोपपद्यते ; अत एतादृशमन्त्रद्रष्टृणा माचार्यर्षीणा मासीत् पुरा तत्रैवावास इति तदभिप्रायः । वयन्तु ब्रूमः— यास्कमते ऋक्षा इति पदेनेह सर्वेषा मेव नक्षत्राणां ग्रहण मिष्टम् ( नि० ३. २० ) ; सर्वेषा मेव तेषां रात्रावेव द्योतमानत्वात् सुसङ्गच्छत एवार्थ यास्कस्य तन्मतम् । अपि सुमेरुप्रदेशतो नक्षत्राणि उच्चैर्दृश्यमानानि, इतोऽपि उच्चैरेव दृश्यमानानि, कुमेरुतोऽपि तानि उच्चैरेव दृश्यमानानीति तेषा मुच्चैःस्थत्वं सर्वत्र प्रत्यक्षम्, किं सुमेरुत एव । न ह्युच्चैःपदेन मस्तकोपरि वर्तमानं भ्राम्यमानं वा गम्यते । यद्युच्येत शतपथब्राह्मणे (२. १. २. ४.) ऋक्षशब्दः सप्तर्षिवाचकोऽपि ; तत्रापि न नः क्षतिः । "उत्तरम्, उत्ततरम्"–इत्यादिनैरुक्तवचनात् ( २. ३. २. ) उच्चैरनिबन्धन मेवोत्तरनामव्यपदेश

इत्यश्रमात् उच्चैरित्यत्रेह सप्तर्षिपत्ते उत्तरस्यां मित्येवार्थ: फलति; पुनश्च तत् तत्रैव शतपथे तदनुपदम्— "उत्तरा हि सप्तर्षय उद्यन्ति"—इति। तदित्थं तत्र दर्शित एव मन्त्रस्वमतसमुच्छेदको भवितु मर्हति न वेति सुधीभिरेवाकलय्यम्।

वस्तुत एव मन्त्रो वरुणविज्ञानपरस्ततो वरुणकर्मपरिचायक एव प्रधानत:; तस्माद् वरुणपदार्थबोधाच्च विलीयत एवैतद् वालविजृम्भितं समन्तात्। तथाहि—"रात्रिर्वरुण:"—इतिश्रुते: (ऐ॰ ब्रा॰ ४. २. ४.) वरुणस्य रात्रिदेवत्वम्; निघण्टौ द्वादशादित्यनामप्रकरणे वरुणशब्दपाठात् सूर्यविशेषत्वम्; "येना पावक चक्षसा॰—॰पश्यन् जन्मानि सूर्य"—इतिस्वोदाहृतश्रुतिव्याख्यानेन भगवता यास्केन तदेव प्रतिपादितञ्च (१२. ३. ८.); एवं हि रात्रिकालिकोऽधःस्थ: सूर्य एव वरुण इति प्रतिपद्यते। एवं वरुणपार्थ्यदोषमारेच्योपपद्यते वरुणराजकर्तृकः सप्तर्षिप्रभृतीनां चन्द्रमसश्च प्रकाश:। परं न चैतद् वच: सङ्गच्छते मेरुप्रदेशवासिनाम्; तत्र सूर्यविशेषस्य वरुणस्य तदधःस्थत्वेन चन्द्रमःप्रभृतीनां प्रकाशकत्वासम्भवात्, प्रत्युत आर्यावर्त्तवासिना मेव सङ्गच्छते; अतस्तत्प्रदर्शितोऽप्येष मन्त्रोऽस्मन्मतपोषक एवेति ध्रुवम्। एवमपि स्वमतप्रमाणाशयास्येहोपन्यासो नूनं नूतनमतप्रकाशप्रमानसस्य तस्य, सुदीर्घप्रान्तरमध्यापतितस्य क्षुत्तृट्क्षामस्य एककाकस्य मरीचिकादिग्भ्रम इवेति॥

तद्वितीयप्रमाण मप्येव मेव। तथाहि—

"अस्त्येक मटादशर्चं सूर्यस्तवाख्य सूक्तम् (ऋ॰ सं॰ १०, ८८.)। तस्य द्वितीयस्या: ऋच: प्रथमार्द्धं एष:—

"स सूर्य: पर्युरू वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा"—इति।

इम मेव मन्त्रांश मवलम्ब्य सुमेरोराध्यार्थ्यायासभूतत्वं प्रमाणयितुं चेष्टितं तेन। तदुक्तम्—मस्तकोपरि रथचक्राकारेण नक्षत्राणां भ्रमणं तदवस्थाना मेव सम्भवतीति। यस्तु तस्य मन्त्रस्य व्याख्यानालोचनतो न तादृशमतच्छायापि गम्यते ; प्रत्युत तन्मतविपरीतं यत् सत्यं तदेव प्रमाणितं भवति। तद्यथा —'इन्द्र:' परमैश्वर्यादिगुणयुक्तः 'सः' 'सूर्य:' 'उरु' उरौ विस्तीर्णान्तरिक्षे 'वरांसि' पृथिव्यादिग्रहोपग्रहमण्डलानि 'धायद्य्यात्' सदेव आवर्त्तयति। तत्र दृष्टान्तः—'रथ्या चक्रा इव' यथा अश्व. मध्यस्थः सन् रथसम्बन्धीनि चक्राणि भ्रामयति. चक्राणा मितस्ततोविक्षिप्तपतनतो रक्षयति च तद्वदिति। एतेन मध्यस्थितसूर्याकर्षणशक्तितः सर्वेषां ग्रहोपग्रहाणा मितस्ततोविक्षिप्तपतन-राहित्यं भ्रमणञ्चेति विज्ञान मुपदिष्टं भवति। वादिमते तु तेषां मस्तकोपरि सूर्यस्याविद्यमानत्वादस्वकपत्वेन सूर्यस्य मध्यस्थितित्वं कथं सङ्गच्छेतेति पक्षपातशून्याः सुधिय एव विभावयन्तु। अन्यत्र मपि स्तुत मन्त्ररूपेण सूर्यस्य स्थितिवर्णनं तदुत्तरत्र—

"यो अक्षेणेव चक्रिया शचीभिर्

विष्वक् तस्तम्भ पृथिवी मुत द्याम्"—इति।

अस्यार्थः।—'यः' सूर्यः 'शचीभिः' आकर्षणक्रियाभिः 'पृथिवीम्' स्वनीचैःस्थितां भूमिम्, ग्रहमण्डलनिम्नार्द्धभागगता मिति भावः; 'उत' अपि 'द्याम्' स्वोर्द्ध्वःस्थितां सुतरां द्युस्थाम्, ग्रहमण्डलोर्द्धभागगता मिति भावः; 'विष्वक्' सर्वतः 'तस्तम्भ' स्तम्भन् वर्त्तते। तस्तम्भेति "छन्दसि लङ्लुङ्लिटः"—इति सार्वकालिको लिट्। तादृगस्तम्भनेन ग्रहाणा मितस्ततः पतनजन्यं कक्षाच्यवनं वारितं भवति। अत्र दृष्टान्तः—"अक्षेणेव चक्रिया"—इति। 'चक्रिया'

चक्रिणौ, चक्रगतौ निम्नोच्चप्रान्तौ यथा 'अद्येव' लब्धौ दृश्येते लोके, तद्वदिति ॥

तत्तृतीयप्रमाणन्तु स्वसिद्धान्ताघातमेव न सहते, किन्तु सत्यसिद्धान्ताघातम्। तथाहि— यदिदं श्रूयते सप्तविधसोमयागेषु अग्निष्टोमादिषु प्रातरनुवाकविधावैतरेयके— "प्रातर्वै स तं देवेभ्यो ऽन्वब्रवीत्"-इत्यादि (२. २. ४.)। एतया श्रुत्या प्रातरनुवाकपाठस्य प्रातरेव कालो व्यक्तीकृतः। ततस्तदुत्तरत्र प्रातरनुवाकर्चां सङ्ख्याविधौ श्रूयते— "सहस्रं मनूच्यं स्वर्गकामस्य"-इत्यादि पक्षान्तरत्वेन। स एषः सहस्रर्चां पाठः प्रातरुषःकाले कथमिहार्यावर्त्ते सङ्गच्छेत? सुमेरुप्रदेशे तु सङ्गच्छते; तत्रोषसो मासद्वयव्यापित्वात्। तदित्थं श्रुतिरियं सहस्रर्चां पाठविधानं गमयत्येवार्याणां दीर्घोषसे सुमेरौ तदानीं वासोऽद्य वास इति।

अत्र ब्रूमः— नेयः प्रातरनुवाकविधिः क्वचिदृक्संहितायां श्रुतः, अपि श्रूयते ब्राह्मणेऽवैतरेयके, तत् किमिदमैतरेयकमपि तत्रैव प्रोक्तम्? तथा स्वीकारे यदिदं श्रूयतेऽवैतरेये— "ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः"-इत्यादि (३८पृ० ४पं०), तत् कथं सङ्गच्छेत? किञ्च यदि प्रातरनुवाकपाठस्य कालो हिमात्मको मन्येत, तर्हि प्रातस्सवनमाध्यन्दिनसवनतृतीयसवनानां कालाः कीदृशा मन्तव्याः? संवत्सरसत्रकालश्च कीदृशः? इत्यादि च तेन निरूपणीय एव। अथापरम्, यदि दीर्घोषसे सुमेरावेव प्रातरनुवाकपाठसम्भव इति मन्येत, तर्हि युधिष्ठिरादिभिर्वाजिरावान्तेरार्यावर्त्तवासिभिरनुष्ठितेष्वश्वमेधादिषु सोमयागेषु प्रातरनुवाकानां पाठो न बभूवेति किं मन्तव्यम्?

अन्यच्च; यथा सहस्रवार्षिकमत्रस्याम्नायता मालव्य मीमांसायां

मधिकारण मारभ्य सिद्धान्तितम्, तथैवोपमि सहस्रसङ्ख्याकाना मृचां पाठोऽसम्भव इति किं नात्र विचारित मित्यपि विचार्य मेवेति।

वस्तुतस्तु "महति रात्रा अनूच्यः पुरा शकुनिवादात्"—इत्येव विधिः। 'रात्राः' पूर्वस्योपवसथ्याख्यस्य दिनस्य अग्निष्टोमीयपशु-सुत्यानुबन्ध्य या रात्रिः तस्या रात्रेः सम्बन्धिनि शेषे 'महति' अवतिष्ठमाने सति प्रातरनुवाकाख्याना मृचां पाठ आरब्धव्यः, 'शकुनिवादात्' शकुनयः पक्षिणः, ते यस्मिन्नुषःकाले प्रबुध्य वदन्ति ध्वनिं कुर्वन्ति, ततः 'पुरा' पूर्व मेव तत्पाठः समाप्य इत्यर्थः। अत्राह सायणः—"एतदुक्तं भवति, यस्मिन् काले प्रारब्धः प्रातरनुवाकः तमसोपघातात् पुरैव समापयितुं शक्यः स्यात्, तदा प्रारब्धव्यः"—इति (२.२.५.)। अवश्यपाठ्य-प्रातरनुवाकस्य सङ्ख्या त्रिकविंशतिरेव (ऐ० ब्रा० २.२१ ६.); काम्यपाठ्यस्य तु शतादिका सहस्रान्ता। तदवावश्यपाठ्याना मृचां पाठस्तु प्रातरेव नूनं सम्पद्यत इति प्रातरनुवाकनाम-करण सुपपद्यत एव। काम्यपाठ्यानां शतादिसहस्रान्ताना मृचां पाठस्तत्रोपस्यमभव इत्येव "महति रात्रा अनूच्यः"—इति विधिः। सहस्रप्रातरनुवाकीयासु ऋक्षु एकपदादीना मप्यस्ति विद्यमानता, न चाभ्यस्तानां पाठे विशेषविलम्बोऽत्र सम्भवति; अतो रात्रा महति भागेऽवशिष्टे आरब्धः प्रातरनुवाकपाठः शकुनि-वादात् पुरा समाप्यो भवेत्, किं तत्र चित्रम्? किञ्च सहस्रर्च-पाठपक्षे "पुरा शकुनिवादात्"—इति नियमाभावश्च। अत एवेद मपि श्रुतं तत्र तदुत्तरम्— "अपरिमित मनूच्यम्"—इति (२.२.७.)। "शतं सहस्र मित्यादि सङ्ख्यापरिमाण परित्यज्य मध्यरात्रादूर्ध्व मुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीरनुवक्तुं

शक्नोत्यदिति तावतीरनुब्रूयात्"—इति तत्र सायणभाष्यम्। एतेन सहस्रानुवचनपक्षे पुरा शकुनिवादादिति नियमो परित्याज्य इति स्फुटम्। अध्ययनकारे 'शतं सहस्र मित्यादि सङ्ख्यापरिमाणं परित्यज्य'—इत्यस्य स्थाने 'सहस्रं सङ्ख्यापरिमाणं परित्यज्य'—इत्येव मन्तव्यम्; सहस्रपाठमात्रस्य कृच्छ्रसाध्यतया तत्रैवापरिमित-पाठव्यवस्थाया औचित्यादिति।

अस्ति चान्यत्र प्रातरनुवाकस्य सर्वदिशपाठ्यत्वश्रुतिः— "उदित आदित्ये प्रातरनुवाक मनुब्रूयात्; सर्वं ह्येवैतदहर्दिवाकीर्त्यं भवति"—इति (ऐ० ब्रा० ४. ३. ४.)। आस्यां बहुसङ्ख्याकर्चां पाठपक्षे एतदपि स्याच्छरणम्; नित्यपाठ्यानां प्रातरनुवाकर्चां मत्यल्पसङ्ख्यात्वेन प्रातःपाठस्य अव्यभाविज्ञात् प्रातरनुवाक इति नामधेयस्यान्वर्थतापि नानुपपन्नेति विचार्य मेतत् सुधीभिरिति॥

अत्रोदीर्घंत्वप्रश्नपरं तदीयवर्णनमात्र मत्यकिञ्चित्करम्। तथाहि— "स आप: परिपसजे"—इति (ऋ० मं० ८. ४१. ३.) मन्त्रे श्रूयते "तस्य वेनीरनु व्रत मुषस्तिस्रो अवर्धयन्"—इति। तदिह उपसत्त्रिलयवणा? दीर्घत्वं गम्यते, तच्च सुमेरावेव सङ्गच्छत इति तदीयम्। तत्वतस्त्विह वरुणविज्ञानोपदेशके मन्त्रे नोयस-त्त्रित्व मभिहितम्, प्रत्युत 'तस्य' वरुणस्य 'व्रतम्' कर्म 'अनु'-सृत्य 'उषः' कालः 'तिस्रः वेनीः' त्रिविधाः जरायुजाजरायुजो-द्भिज्जाः 'वेनीः' प्रजाः 'अवर्धयन्' वर्धयति इत्येवोपदिष्टम्। अन्यत्रान्यत्र च "प्रजा ह तिस्रो अत्याय मीयुः"—इत्यादौ (ऋ० मं० ८. १०१. १४.) प्रजानां त्रिविधत्वं श्रुत मेवेति द्रष्टव्यम्। 'अव-र्धयत् + नभन्ताम्—इतिपदद्वयसन्धिजन्यम् अवर्धयन्नभन्ता मिति रूपम्; अपिवा व्यत्ययकृतं बहुवचनम्।

उषसो दीर्घत्वप्रमाणाय तेन यदियमृगुदाहृता— "कियात्या यत् समया भवाति"–इति (ऋ० १. ११३. १०.), सैषा उषोविज्ञानसूक्तान्तर्गता उषसोऽनन्तत्वं वेदयति, न तु प्रादेशिकदीर्घत्वम् ।

तथोषसः पञ्चविभागव्याख्यानेन दीर्घत्वं सूचयितुं यत् तैत्तिरीयानुवाकस्योद्धरणम् (सं० ७. २. २०.), तदपि निरर्थकम्; तादृशविभागस्यात्रार्यावर्तेऽप्युपयोगित्वात् ।

किञ्चेदमपि विवेच्यम्,— सुमेरुप्रदेशीयोषसो दीर्घत्वं किमार्यावर्तवासिना मन्त्रद्रष्ट्रा प्रतिपाद्यते, उत तत्रत्याना मिति । इहत्याना मिति चेत्, तेन कथं सिध्येत् तत्रार्याणां वासः ? अथ तत्रत्यानां तादृशमन्त्रद्रष्टृत्वं प्रमेय मिति चेत्, तदपि नोपपद्यते; दीर्घत्वं ह्यापेक्षिकं भवति, न हि तत् उषोऽन्तरदर्शनविरहादपि सङ्गच्छते । तत् किमेतेन उषोदीर्घत्वप्रकाशकमन्त्रान्वेषणेनेति धीषणावता तेनैव स्वय मालोच्य मिति ॥

यदिदं श्रूयते— "तानीदहानि बहुलान्यासन् या प्राचीन मुदिता सूर्यस्य"–इति (ऋ० सं० ७. ७६. ३.), तदितः खलूषसः कतिदिनव्यापित्वं गम्यते स्फुट मिति तेषा माचार्याणां सुमेरुवासित्वे प्रथम प्रमाण मित्याह । अस्माकं तु नात्र श्रुतौ तिलकोद्भावित मर्थतिलकं प्रतीयते, प्रतीयते ह्यस्या मानन्त्यम्; तदिहाशेषशेमुषीमन्तो भूमिदेवा एव प्रमाणम् ॥

उषःशब्दस्यानेकत्र बहुवचनान्तप्रयोगोऽप्यत्राप्येकं प्रमाणम्, तदिदं पतं स्यात् । तद्यथा तैत्तिरीयब्राह्मणे मन्त्रः—

"इमा एव ता उषसो याः प्रथमा व्यौच्छन् ।
ता देव्यः कुर्वते पञ्चरूपा । शश्वतीर्नावपृज्यन्ति ।
न गमन्त्यन्तम्"–इति (२. ५. ६. १४.) ।

तत्तस्तत्प्रदर्शितो ह्येष मन्त्रः पुनर्जन्मविषयो न तूषसो दैर्घ्य-मावेदति ; तत् पश्यत्वेतत्पूर्वमन्त्रावेतौ—

"पूर्वं देवा अपरेणानुपश्यञ्जन्मभिः। जन्मान्यवरैः पराणि।
वेदानि देवा अयं मस्मीति माम्।
अहत्य हित्वा शरीरं जरसः परस्तात्"—इत्येकः,

अथापरः— "प्राणापानौ चक्षुः श्रोत्रम्। वाचं मनसि संभृताम्। हित्वा शरीरं जरसः परस्तात्। आ भूतिं भूतिं वयं मश्नवामहै" —इत्यतस्तृतीय एवैष यः प्रदर्शितपूर्वः। तया च पुनर्जन्मनि दृष्टा एवेमा उषस इत्येव तात्कालिकार्थः सम्पद्यते। एवञ्च न कथं मप्येष मन्त्रः सुमेरुप्रदेशीयोषसो बहुदिनव्यापित्वे प्रमाणं भवितु मर्हतीति स्फुटम्। किञ्च तत्रत्योषसो बहुदिनव्यापित्वं तत्र यानां कथं भवेदधिगन्तव्य मित्यपि विचार्य मेव॥

यदप्युक्तं सूर्यस्य उषसश्च सुमेरुतो दक्षिणोदयदर्शनादेव "पुन-श्चरति दक्षिणायाः (ऋ० सं० २.५८.१.)"—इति दक्षिणापुनश्चर-व्यपदेशोऽपीति। तदेतत् सर्वमं प्रमाण मपि मज्जमानस्य वह-मानतृणावलम्बन मिवाकिञ्चित्करम्। उत्तरः=ऊर्ध्वस्थः सूर्यः, दक्षिणा=अधःस्था पृथिवी, इत्येव सर्वत्र ज्ञेयम्। सुमेरु-वासिनां तु येयं दिगस्माकं पश्चिमा, सैव स्याद् दक्षिणा; यस्यां दिशि सूर्योदयस्तस्या एव प्राक्त्वं नियमात्। पुरः पुरस्तात्, प्राक्, पूर्वेत्यभिधार्थाः; सूर्योदयाक्रान्तनिबन्धन एवात्र भवत्यस्माकं दिग्-व्यवहारः प्राक्प्रभृतिगताङ्गितोऽपि। श्रुतिसिद्धं (ऐ० ब्रा० १. २. ३.) युक्तिगम्यञ्चैतत् किं तेन स्वमतप्रतिपादनव्यग्रतया विस्मृत मपि वा हठैकपरतया अस्माकं चक्षुःषु धूलिमुष्टिप्रक्षेपायोद्युत मति मुक्तायितुं यतितमिति विचारयन्तु धीमन्त एव॥

अहो चित्र मिदम्! "सप्तर्षिहस्तावचितावशेषाण्यधोविवस्वान्"—इति कुमारसम्भवश्लोकोऽपि तेन स्वमतप्रमाणत्वेनोपन्यस्तः, तत् किं मद्युगीयस्य "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः"—इतिवादिनः कालिदासस्यापि सुमेरुस्थलं मन्तव्यम्? तदिदं तदीय मष्टमं प्रमाण मस्मानतीव विस्मापयतीत्यत्र मौनावलम्बन मेव श्रेयः॥

"दीर्घतमा मामतेयः"—इत्येतदनुक्तो 'दीर्घतमाः'—इति सञ्ज्ञापद मपि स्वमतप्रमाण ममानि तेन। तदिदं तदीयं नवमं प्रमाणम्। तत्ततो वेदार्थमीमांसैकप्रयोजनस्य मीमांसादर्शनस्य मते दीर्घतमा इति हि प्रावाहणिरितिवत् कल्पितं नाम;—यः खलु ममतापत्नतः, स नूनं दीर्घतमास्तत्र कः सन्देहः। द्रष्टव्यश्चैव सिद्धान्तो मी० द० १. १. २८—३२ सूत्रभाष्ये॥

यदपि निर्णीतम्,—वैदिकमन्त्रेषु 'नवग्वा'—इतिपदस्वारस्यात् नवमासात्मको वर्षः 'दशग्वा'—इतिपदस्वारस्याद् दशमात्मको वर्षश्च गम्यते, तादृशवर्षो नास्मद्देशेष्विति नूनं सुमेरुदेशीय एवैवं वर्षो वर्णित इति स्वीकार्य मित्य मपि सिध्यति तस्यार्यादिवासभूत्व मिति। तदिदं दशमं प्रमाण मपि निर्बीज मेव। अत्र हि बहवः प्रश्नाः समुत्तिष्ठन्ते। तद्यथा—सुमेरुप्रदेशे किं मद्यापि नवमासात्मकोऽब्दः प्रचलितो विद्यते? उत दशमासात्मकः? आद्यश्चेत् दशग्वशब्दस्य का गतिः? द्वितीयश्चेदाद्यस्य का गतिः? उभयविध एवाब्दस्तत्राद्यापि भवतीति चेत्, कथं तयोरेकत्र समावेशः? यथास्मद्देशेष्वेव भूभ्रमणजन्य मब्दपरिगणनं भवति, तथा तत्र मत् किंनिबन्धनम्? यस्मादब्द एव तेषा मेकदिनम्, तादृशकतिदिनात्मकः को मासः? तादृशकतिमासात्मकश्चाब्दः? तादृश-

कत्यब्दस्थायि च तेषां जीवनम् ? श्रुतिसिद्धं शतायुष्ट्वञ्च तेषां कथङ्कार मुपपद्यत इति ।

इहापर मपि विवेच्य मस्ति,—यथा नवग्वा पदं नवमासात्मकवर्षवाचकम्, दशग्वा पदं दशमासात्मकवर्षवाचकं चेति मन्यते, तथैव शतग्विपदं किं शतमासात्मकवर्षवाचकं मन्तव्यम् ? श्रूयते तु शतग्विपद मपि। तद्यथा—

"शमे चिदन्तो अद्रिवोऽश्वावन्तः शतग्विनः ।
विवक्षणा अनेहसः"—इति ऋ० सं० ८, ४५, ११ ।
"आ न इन्द्रो शतग्विनम्"—इति च ऋ० सं० ८, ६७, ६ ।

वस्तुतस्त्वेवमादिषु स्वमतपोषकत्वदर्शनं तस्य नूनं पाण्डुरोगिणां सर्वत्र पीतदर्शन मिवेवेति मन्यामहे वयम् ॥

यच्च सिद्धान्तितं तेन,—वैदिकमन्त्रादिषु देवयानशब्दतः सूर्यस्य सुमेरुयान मुत्तरायण मवगम्यते, पितृयानशब्दतश्च सूर्यस्य कुमेरुगमनं दक्षिणायनम्; तथा च सुमेरुप्रदेशेषु देवयानेऽह्नः सम्भवति, पितृयाने च रात्रिरतो देवयानपितृयानशब्दान्वितमन्त्राणां तत्रैव रचना बभूवेति तत्रार्यादिवासस्येद मेकादशं प्रमाण मिति । एतच्च सर्वं स्यात् प्रेक्षावतां परीक्षणासह मेव । तत्रैवम्,—मध्यभूभागत एव हि उत्तरायणदक्षिणायने परिदर्शनीये, उत्तरदक्षिणकेन्द्रभूवासिनान्तु नैते समधिगम्ये ; तत् किमु देवयानपितृयानशब्दार्थतो दिवानिशेत्यादिसमुद्भावनादिविचारेणेति । यच्चोक्त इहत्या पूर्वजा देवयानपितृयानशब्दान्वितमन्त्रद्रष्टारो बभूवुरिति स्वीकार्येऽपि देवयानार्थस्तु सुमेरुगमनमार्गः, सुमेरोश्च देवस्थानत्वकथन मार्यपूर्वपुरुषावासनिबन्धन-गौरवसूचक मिति, एतदप्यसङ्गतम्; शतपथब्राह्मणादौ (१४. ८. १.) देवयानपितृयानशब्दयोरपरार्थ-

प्रतीतेः, सुमेरोर्देवस्थानत्वे स्वीकृतेऽपि तत्रास्मदादिपुरुषाणां वासस्य हेतूपलाभाभावाच्चेति स्वच्छधिया ध्यातव्यम्। वस्तुतस्तु 'देवाः' द्युस्थाः अग्निप्रभृतयो 'यान्ति' गच्छन्ति, येन मार्गेण, स एव भमण्डलादिभ्रमणमार्गो देवयानाख्यः; तथा 'देवाः' द्युस्थाः रश्मयः पृथिव्यादौ गच्छन्ति, यैर्मार्गैस्तेषाञ्च सुतरां देवयानसञ्ज्ञा; तैरेव मार्गैः पृथिव्यादिग्रहेषराश्तनिवासिनो विनिर्मुक्तस्थूलदेहा जीवा रश्मिभिराकृष्यमाणा द्युलोकं गच्छन्ति। तथैव पितृस्थानानां चन्द्रमण्डलादीनां भ्रमणमार्ग एव पितृयानम्; अपि अन्तरिचस्थ' यमनामवायुविशेषाधिकृतं चन्द्रलोक मपरं वा तत्सन्निहितं पितृलोकं त्यक्तस्थूलदेहा अर्चिरादिसहायाः गच्छन्ति येन, स एव मार्गः पितृयानाख्यः। तिलकोदाहृतमन्त्राभ्यामेवमेव बुद्ध्यते। तत्र प्रथम एषः ( ऋ० सं० १. १८३. ६. )—

"अतारिष्म तमसस्पार मस्य प्रति वां स्तोमो अश्विनावधायि। एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुम्"—इति।

अस्यार्थः— हे 'अश्विनौ' प्रातरुद्गमानप्रथमयुग्मदेवौ ! 'देवयानैः पथिभिः' द्युस्थैः स्वमार्गैः 'इह' पृथिव्याम् 'आयातम्' उदयताम्। तथाचेह युवयोरुदयात् 'अस्य तमसः' रात्रिजन्यान्धकारस्य 'पारम्' पर्यन्तम् 'अतारिष्म' उत्तीर्णाः स्मः। 'वां प्रति' 'स्तोमः' कृतज्ञतासूचकं स्तोत्रम् अस्माभिः 'अधायि'। 'इषम्' अन्नम्, 'वृजनं' मनोबलम्, 'जीरदानु' जरान्तव्यापिनं सुदीर्घजीवनञ्च 'विद्याम' लभेम, वय मिति। एवञ्चाश्विनोरुदयकाले जाग्रतः स्तोत्रगानं कुर्वतोऽन्नादीनि अवश्यमाप्स्यन्तीति समर्थजनैरुक्तया कर्त्तव्य मित्युपदेशः फलितः।

अथापरः ऋ० सं० १. २. १८ पूर्वार्द्धः—

"परं मृत्यो अनु परेहि पन्थां यस्ते स इतरो देवयानात्"–इति।

अस्यार्थः— हे 'मृत्यो!' 'तं' 'देवयानात् इतरः यः स्वः' पन्थाः, 'तं' 'पन्थां' पन्थानम् 'अनु'-लक्ष्य 'परेहि' इति। अत्र मृत्युर्माध्यमिको वायुविशेषः, आन्तरिक्षो मार्ग एव पितृयानाख्यस्तस्य स्वकीयः। यथा भूस्थाना मग्निः राजा, द्युस्थानां सूर्यः, तथैव मध्यस्थानां पितॄणां मृत्युर्यमो वा राजेति। यायजूकानां स्वर्गगामिनां पितॄणा मर्चिरादिसाहाय्येन पितृयान मेव शरणम्।

संहितायां मन्त्रान्तरे चैवं श्रुतम्। तद्यथा (१० २. ७.)—
"पन्था मनु प्र विद्वान् पितृयाणं द्युमदग्ने समिधानो वि भाहि"

हे 'अग्ने!' 'पितृयाणं विद्वान्' त्वं 'समिधानः' सन् 'द्युमत्' यथा स्यात् तथा 'प्रविभाहि' इति तत्संक्षेपार्थः। एतेनाग्निशिखानां पितृयानगामित्वम्, तदनु अनुष्ठितयागानां त्यक्तपार्थिवदेहानाञ्चेति ध्वनितम्॥

श्रुतं च तैत्तिरीयब्राह्मणे—"एकं वा एतद् देवाना मह्नः यत् संवत्सरः"–इति (३. ९. २२. २.)। अप्येतन्मूलकं स्मार्तमनुवचनम् (१. ६७.)—

"दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः।

अहस्तत्रोदगयनं रात्रिः स्याद् दक्षिणायनम्"–इति।

तदेवमादिवचनानि तूपपद्यन्ते सुमेरावेवेत्यतः स एव देवलोको मन्तव्यः। अत एव महाभारतीयवनपर्वणि— "उदीचीं दीपयन्नेष दिशं तिष्ठति वीर्यवान्। महामेरुर्महाभागः शिवो ब्रह्मविदां गतिः"–इत्यादिः कथा च वर्णिता (१६३अ०१२श्लो०)। तानीमान्येव वचनान्यवलम्ब्य प्रथमं सुमेरोर्देवनिलयत्वं सर्वसम्मतमिति प्रमाणयितुं चेष्टितं तेन; ततस्तथार्यपितृपुरुषाणां ग्राम

आसीदित्यत एव देवनिलयत्वेन स मेरुर्वर्णित इति सिद्धान्तितं निराबाध मिवेति। अहो वत! तस्यैव सिद्धान्तोऽपि दरिद्राणां मनोरथ इवैव प्रतिभात्यस्माकम्। न हि शुल्युक्तस्य देवाना मित्यस्य सुमेरुवासिना मित्यर्थावगतौ किञ्चिन्मान मस्ति; अस्ति च ततोऽन्यत्र। मनुसंहितायान्तु अस्मत्संवत्सरकालमितं भवति देवाना महरित्युल्लिखित मिति तु सत्यम्, परं न तत्र सुमेरोर्गन्धोऽप्यस्तीत्यपि नासत्यम्। एवं महाभारतादौ सुमेरुवासिनां देवत्वं वर्णित मिति च सत्यम्, पर मिहापि न तेषां देवानां मासत्त्वयनवत्सरमानान्यभिहितानीत्यपि नासत्यम्। शतस्थानि तु सुमेरुप्रदेशीयदेवग्रन्थवाच्यानां तानि च भवन्ति कथम्भूतानि? आयुःपरिमाणञ्च तेषां तदब्दमानतो भवति कीदृश मित्यपि ज्ञेय मेव। अस्त्येवं "शतायुर्वै पुरुषः"—इत्यादिश्रुतिसिद्धं शतायुष्टं तत्प्रदेशवासिनां तद्देशीयाब्दमानेनैव भवति चेत् कथं न तत्र श्रुतिविरोधः सम्पद्यते? वेदेषु हि यच्छ्रूयते मानवानां पूर्णायुः शतवर्षाणीति, तन्नून मस्मद्देशीयाहोरात्रमानत एवेति सर्व मेवैतच्चिन्त्य मेव। किञ्च यथा सुमेरुप्रदेशेषु "दैवे रात्र्यहनी वर्षम्"—इति मनुवचन मुपपद्यते, तथैव कुमेरावपि किं नोपपद्यते इत्यपि विचार्य मेव। विचारितेषु चैतेषु सुमेरोराद्यार्यावासनिर्णयाय तेन प्रदर्शितं प्रमाणपारायणं कुतो न जलमध्यगतलवणवद् विलीयेतेत्यपि ध्येयम्।

वस्तुतो महाभारतादौ यद् वर्णितं सुमेरोर्देवलोकत्वम्, तत्त्वापेक्षिक मित्यस्माभिर्मन्यत एव। यथेह सौरजगति भूर्लोकान्तरिक्षलोकद्युलोकविभागास्तथैवास्मच्छरीरेऽपि मन्यन्त एव शारीरविज्ञिरस्मद्देशीयैः। एव मग्निवायुसूर्यज्योतिषां प्रधानतो

भूरादीनि स्थानानीति स्वीकारकारिणोऽपि वय मिहैकत्र भुव्येव किं तेषां विद्यमानता न स्वीकुर्महे ? भुवि तेषा मस्तित्वस्य कथा तु दूरे आस्ताम्, भौमपदार्थेषु मच्छरीरादिषु च सर्वत्रैव तेषां वयाणा मेव देवानां सत्ता स्वीकुर्महे एव। तदेवं यथास्य सौरजगतं ऊर्द्धभागे स्वर्गस्थितिः स्वीक्रियते, तथैवास्यां पृथिव्या मपि वङ्गादिदेशत ऊर्द्धस्थाः काश्मीरादयो वङ्गादिदेशीयानां स्वर्गाः, तत ऊर्द्धस्थाः कैलास-गन्धमादन-रावणह्रद-मानससरोवरादयः काश्मीरीयादीना मपि स्वर्गाः, ततोऽपि ऊर्द्धस्थाः सुवीर्यप्रदेशाः आत्म-पितृवर्गोदयश्च रावणह्रदादिवासिना मपि स्वर्गाः, तेभ्योऽप्यूर्द्धतनः सुमेरुप्रदेशस्तु सर्वभूवासिनां स्वर्ग एवेत्यत्र कः संशयः। अपि हि पृथिव्या उत्तरकेन्द्रस्योपरिभागे ध्रुवस्य संस्थानदर्शनात् तत्केन्द्र-भागस्योर्द्धत्वम्, तत एव तस्योत्तर इति व्यपदेशश्चेति सिद्धान्तः सर्ववैदिकसम्मतः। अत एव महाभारते उदीच्यां देवनिलयो वर्णितः, अपाच्यां यमनिलयश्च, एव मन्यत्रान्यत्र च। तदित्थं सुमेरु-प्रदेशस्य तस्य स्वीकृतेऽप्यार्पिचिकदेवनिकेतनत्वे न सिध्यति तत्रा-र्यार्यावास इति ध्रुवम्॥ .

यदपि स्वमतपोषिकेत्युद्धृता मक्तृतां सामटीप्पन्येका तेना-युष्मता, तदपि तथैव। पश्यतु तावत्,— अस्ति सामोत्तरा-मन्त्रः "समानी अध्वा स्वस्रोः"-इति (सा० म० ८. ३. १४. ३.), श्रुतस्तत्र 'सुमेके'-इति पदम्; विवरणकृन्माधवाचार्येण तद्व्या-ख्यायां 'संवत्सरे दक्षिणायने रात्रेर्वृद्धिः, उत्तरायणे त्वह्नः'-इत्य-लेखि, मया चैषा पङ्क्तिस्तत्र स्वकीयटीप्पन्यां प्रकाशिता च। सुमेरु-प्रदेशवासिना मेव दक्षिणायने प्रसरति रात्रिः, उत्तरायणे च तथा दिन मिति तद्वर्णनपरैषा ऋगित्याह स श्रीमान् बालगङ्गाधरः।

तत्तत्स्वे तदार्यावर्त्तीययोरेवाहोरात्रमानयोर्वर्द्धनकालप्रकाशने एव तस्याः पङ्क्तेस्तात्पर्यम् ; दक्षिणायने हि वर्द्धत एवेह रात्रिमानम्, तथोत्तरायणे च दिवामान मिति। किञ्चात्रैव मन्त्रे यच्छ्रूयते 'समानो अध्वा स्वस्रोः'–इति, भगिनीरूपयोः रात्र्युषसोः सञ्चर-मार्गः एक एव, येनाकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपीति तदर्थः। तदेव मिदं स्वप्नदृष्टाश्रुतपूर्वरज्जोद्धरणाय वेदावेस्तादि-जलधिप्लवमानस्याश्रयहीनस्य तस्य कुशकाशावलम्बनं सर्वथा निरर्थकमेव भवितव्यं तत्रास्ति किमु शोच्य मिति दिक्॥

अथैवम् "अनु प्रत्नस्यौकसो हुवे ( १. ३०. ९. )"— इत्यादि-श्रुतिगम्य मार्याणां प्रत्नौकस्त्वं कतमस्य प्रदेशस्य स्यात्मत्स्य मिति चेत्, अत्रोत्तरन्तु "स चार्यावासः पूर्वं तावत् हिमवत्पृष्ठस्य दक्षिण-भागे सुवास्तुप्रदेशे एवासीत्"–इत्यादिनोक्त मिवैव द्रष्टव्यम् (२२पृ० १८पं०)। अपि "अनु प्रत्नस्यौकसो हुवे"–इत्युक्त्यवणमात्रेण किं सर्वेषा मेवार्याणा मादिवासोऽन्यत्र क्वचिदासीदित्यनुमानं स्यात् सङ्गतम्, किमु स्यात् तन्मन्त्रद्रष्टुरेवेति च विवेच्यम्।

श्रूयते ह्येवम् ( ऋ० मं०. ३. ५८. ६. )—

"पुराण मोकः सख्यं शिवं वां
युवोर्नरा द्रविणं जह्नाव्याम्।
पुनः कृण्वानाः सख्या शिवानि
मध्वा मदेम सह नू समानाः"–इति।

एतस्य मन्त्रस्य द्रष्टुः शुनःशेपस्य पूर्वावास आसीद् जाह्नव्या मूले जह्नुनाश्चाधिपत्ये ( ऐ० ब्रा० ७. ३. ६. ) जह्नुमुन्याश्रम-कान्तारे ; तत एव हरिश्चन्द्रपुत्रो रोहितः तं क्रीत्वा सारस्वतप्रदेश मानीतवान्। तदाख्यान मिहैव ( ७. ३. १—६. ) श्रुतम्।

जह्नोस्तदाश्रमारभ्यं तत्रापि जाह्नवप्रदेश इति गङ्गाप्रभवे हिम-पत्पृष्ठे प्रसिद्धम्। तत एव जाह्नवप्रदेशात् गङ्गायाः प्रकाशदर्श-नाद् गङ्गायायापरं नाम जाह्नवीति। तदित्थम् "अनु प्रत्नस्यौकसो हुवे"—इति श्रुतिः सिद्धान्तपक्षेऽपि सुसङ्गच्छत एव। अपिवा हिमवत्पृष्ठस्थौकोनामनदीतीरभूमय एव प्रत्नौकसः; तत्र चासीत् केषाञ्चिदार्य्याणां पुरा वास इत्यपि सुवच मिति॥

इदानीं सेयार्य्यावर्त्तभूमिः पश्चिमत उत्तरतश्च क्रमात् सङ्कुचिता, दक्षिणस्यामपायः पूर्ववदेव, पूर्वस्यान्तु कुरुक्षिन्नत्युत्कल-राढ़-गौड़-वङ्ग-नरक-प्रदेशा अप्यद्यार्य्यावर्त्तान्तर्गताः पुण्यभूमय एव गण्यन्ते; अतोऽद्यत्वघाह्वाध्यायाच्च यूरोपादीनां म्लेच्छदेशत्वं मत्वा तत्र गन्तुं न हृदयेनोत्सहन्ते। कालो हि बलवत्तर इति॥

अथ प्रकृत मनुसरामः। एतस्मिन्नेवार्य्यावर्त्तेऽस्यैतरेयस्यासीद् वास इति स्वीकृतेऽपि, तदानीन्तनार्य्यावर्त्तस्वरूपेऽभिज्ञातेऽपि, कतम-स्मिन् प्रदेशे स उवासेति निर्णयोऽसम्भव इव प्रतिभात्यस्माकम्; वक्ष्यमाणप्रकारेणास्य पाणिनिशास्त्रादिभ्योऽतिप्राचीनत्वनिर्णयात्। एव मपि तत्र कृतेऽतियत्नेऽवगम्यते स्यादैरावतीतटसन्निहिते क्वचित् प्रदेशे इति। श्रुतं ह्यत्रैकत्र ऐरावतीपारदृष्टान्तः—"यथा सैरावतीं नावं पारकामाः समारोहेयुः"—इति (६. ४.५.)। इह 'सा' इति द्वितीयैकवचनस्य सौ रूपम्, ता मित्यर्थः। सायणेन तु सैरावती मित्येकं पदं नाव मित्यस्य विशेषणं कृतम्, समुद्र मित्यध्याहृतञ्च। तन्न रोचतेऽस्मभ्यम्; अकृतेऽध्याहारेऽपि सम्भवत्यर्थेऽध्याहारस्या-नौचित्यात्, समुद्रस्यैवं सर्वदैव नावा तरणं सर्वदेशीयानां सर्वेषा मनुपलम्भाद् दृष्टान्तयोग्यत्वाभावाच्चेति। सैषा नदी संहिताकाले परुष्णीति प्रसिद्धासीत्, तदुक्तं निरुक्तकारेण "इमं मे गङ्गे"—इति

मन्त्रस्य व्याख्यानावसरे "इरावतीं परुष्णीत्याहुः"–इति ( ९. ३. ५. )। तदेव मवैवार्यावर्त्ते इरावत्या नद्याः सन्निधौ कस्मिंश्चिज्जनपदे स विरराज महिदास ऐतरेय इति सिद्धम् ॥

---

( ४ )

अथ कः कालोऽस्यैतरेयस्येति विचार्यम्। श्रूयते हि ऋक्संहितायां चतुर्दशर्चं सूक्तमिदम्— "प्रैते वदन्तु ॥ वयं वदामः"–इति ( १० ९४. १—१४. )। तदिदं सर्वचरनामजनपदे अर्बुदनामर्षिणा दृष्टम्। तदाहैतरेयः— "देवा ह वै सर्वचरौ सत्रं निषेदुः, ते ह पाप्मानं नापजघ्निरे। तान् होवाचार्बुदः काद्रवेयः सर्पऋषिर्मन्त्रकृत्"–इति ( ६. १. १. )। तस्मिन सर्वचरौ अर्बुदोदासर्पणी, नामिका प्रपदासीत्। प्रपद्=जलप्रपातो निर्झरो वा। ऐतरेयकालेऽपि सा प्रपदासीत् प्रसिद्धा। तदुक्तं तत्र तदुत्तरम्— "तस्माप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति"–इति। सैषा प्रपत् यास्ककालात् पुरैवाभवद् विलुप्तेति गम्यते, अन्यथा तदानीन्तनं तन्नाम निरुच्येत तेन, यथा विपाशः। तथाहि— "आर्जीकीये शृणुह्या सुषोमया" –इति (ऋ० सं० १०. ७५. ६.) ऋगंशव्याख्यावसरे निरुक्तं तेन— "आर्जीकीयां विपाडित्याहु॰—॰पूर्वं मासीदुरुञ्जिरा"–इति ( निरु॰ ९. ३. ५. )। तदेवम्— यास्कसमये या नदी विपाडिति प्रसिद्धा, सैवासीत् तन्मन्त्रकाले आर्जीकीया, ततः पुरा उरुञ्जिरेति च व्यक्तम्। एव मेकस्या एव नद्याः कालभेदात् त्रिधा

प्रसिद्धिर्दर्शिता ; मात्र तथा अर्वुदोदासर्पस्यास्तात्कालिकं नामादिकं किमप्युक्तम् ; इत एव गम्यते ततः पुरैव सा विलुप्ता, विभिन्ननामहेतुतोऽपरिचेया वाभूदिति। तथा चाय मैतरेयो निरुक्तकृतोऽस्माद् यास्कात् पूर्वतनः। उपलभ्यते चेत ऐतरेयतोऽपि बहूनि वचनान्युद्धृतानि यास्केनेति। तद्यथा— "यस्यै देवतायै हविर्गृहीतं स्यात् तं मनसा ध्यायेत् वषट् करिष्यन्निति ह विज्ञायते"—इति निरु० ८. २. ७.। एतच्चाम्नात मैतरेये ३. १. ८।

भगवता पाणिनिमुनिना यथाय मितराशब्दः शुभ्रादिगणे पठितः (४. १. ११३.), यतः सम्पद्यते इतराया अपत्यं पुमानैतरेय इति ; गणकारश्च पाणिनिरेवेति ध्वनितं पूर्वापरावरेतिसूत्रभाष्ये ; अतोऽवगम्यते अय मैतरेयः पाणिनितोऽपि पूर्वतन इति। अपि नडादिगणे (पा० सू० ४. १. ९९.) आश्वलायनशब्दमूलस्य अश्वलशब्दस्य पाठादवगम्यते तदेव ; आश्वलायनाचार्य पूर्वतनइतिसिद्धान्तात्। सुचितञ्चैतत् "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः"—इति (पा० ४. ३. १२९.)। अनेनैव सूत्रेण छन्दोगानां धर्म्म आम्नायो वेत्यर्थे सिध्यति छान्दोग्य मिति पदम् ; तथा च छान्दोग्यात् परभवत्वं पाणिनेर्नूनं मन्तव्यम् ; श्रूयते च तत्र छान्दोग्ये "तद्विद्वानाह महीदास ऐतरेयः"—इति (५. १६. ७.)। इतोऽप्यसन्दिग्ध मस्य पाणिनिपूर्वजत्वम्।

कल्पकृदाश्वलायनोऽपि नून मेतस्मादैतरेयात् परतनः ; तत्र बहुत्र ऐतरेयनामस्मृतेः। तद्यथा — "अन्तरेण हविषी विष्णुमुपांश्वैतरेयिणः"—इति आश्व० श्रौ० सू० १. ३. १२, पुनः ३. ६. ३, १०. १. १२ इत्यादीनि च।

पञ्चग्रीवलशाखाप्रवक्तृभ्यः शिशिराश्वलायनान्तेभ्यः पदस्य-

शाय मैतरेयः पूर्वतनः ; इहोद्धृतमन्त्राणां तत्रादर्शनात् । तदिद मनुपदं प्रतिपादयिष्यामः शाखाविचारप्रसङ्गे ।

एतेन यत् सिद्धान्तितं केनचित् पाश्चात्येन विदुषा— "इहैतरेये 'पारिक्षितस्य जनमेजयस्य'–इति-( ७. ५. १. )-श्रवणात् स्यादय मैतरेयो जनमेजयाच्च राज्ञः परभव."–इति, तन्नून मपास्तम् । वस्तुत एतन्नामस्तुतित एव मर्जुनपौत्रस्य परिक्षिन्नाम बभूव, बभूव च तथा तत्पुत्रनाम जनमेजय इत्येव स्यात् सर्वसामञ्जस्य मिति ।

अथ यदत्र श्रूयते ( ३. ४. ५. )—

"तदेषाभियज्ञगाथा गीयते—

यदस्य पूर्व मपरं तदस्य यद्वस्यापरं तद्वस्य पूर्वम् ।

अहेरिव सर्पणं शाकलस्य न विजानन्ति यतरत् परस्तादिति" –इति । तदेतेनास्य शाकल्याचार्यात् परभवत्वं स्पष्टम् । एष च शाकलः शकलस्यानन्तरापत्यं नूनम् ; गोत्रे तु "गर्गादिभ्यो यञ् ( पा० ४. १. १०५ )"–इत्येतेनैव भाव्यम्, तथाच सम्पद्यते शकलस्य गोत्रापत्यं पुमान् शाकल्य इति । मुद्रिते ऐतरेयारण्यकभाष्ये ( ३. २. १. ) यद् दृश्यते 'शकलस्य पुत्रः शाकल्यः'–इति, तद्व्यात् गोत्रविवक्षयैव ; अनन्तरापत्यविवक्षया यञोऽप्रवृत्तेः । अपि वा मुद्राशोधकप्रमादत एव तत्र तथा पाठः सम्पन्नः ; 'शकलस्य पौत्रः'–इति, 'शाकलस्य पुत्रः'–इति, 'शाकलस्य गोत्रः'–इति वा स्यात् तत्रत्यपाठो विशुद्धः । ये तु शाकल्यशिष्याः शिशिरादयः, ते चासन् शाकला एवोच्यमानाः ; छात्रेऽपि विवक्षिते "गोत्रे लुगचि"–इति ( पा० ४. १. ८९. ) गोत्रप्रत्ययस्य यञो लुग्विधानात् । परं नात्र यज्ञगाथायां तेषा मन्यतमस्य नामपदग्रहणं सम्भाव्यते–कथं हि स्यादेतरेयतोऽसिन्नमीनगाथायाम्

ऐतरेयोत्तरभवस्य शाकलस्य नामग्रहण मिति। तेषा मैतरेयपरभवत्वं त्विहैवोपरिष्टादुपपादयिष्यामः।

"अपत्यं पौत्रप्रभृति गोत्रम्"—इति (४. १. १६२.) पाणिन्युपदेशात् शकलस्य गोत्रापत्यत्वं तु शकलपौत्रस्य, शकलप्रपौत्रस्य, शकला न्नततमाधिकपुरुषस्य च स्वीकार्य मेव; तदेवं शकलगोत्र इति विवक्षिताः सर्व एव पुरुषाः शाकल्य इत्याख्याता भवन्ति। अत एव ब्रह्मक्प्रातिशाख्ये 'शाकल्यस्य'—इत्येतन्मात्रोक्तितः प्रसिद्धस्य पदकारस्यैव शाकल्यस्य बोधः स्यादिति क्वचित् 'स्थविरस्य शाकल्यस्य'—इत्युक्तम् (१प० २प० ८व०), क्वचित् (१. ४. १.) 'शाकल्यपितुः'—इत्युक्तम्, क्वचिविविशेषणाच 'व्याड़िशाकल्यगार्ग्याः'—इति (३. १. ३.)। तदत्र व्याड़िशाकल्यगार्ग्या इत्यत्रातिप्रसिद्धस्य पदकारस्य शाकल्यस्य ग्रहणं भवति, शाकल्यपितेत्युक्त्या चास्यैव ग्रहण मिष्यते, स्थविरविशेषणविशिष्टस्तु ततोऽपि प्राचीनः कश्चिद् बुध्यते। एवं यत् श्रूयते शतपथब्राह्मणे— "अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति"—इत्यादि (१४. ६. ८. १.), सोऽयं याज्ञवल्क्यसमसामयिकः शाकल्योऽन्य एव। अथप्रचलितायाः शाकलान्यतमाया आश्वलायन्याः शाखायाः प्रवक्तुराश्वलायनस्याचार्यश्चाभवदपरः शाकल्यः। त इमे सर्व एव शाकल्याः प्रदर्शितशाखाख्यातशाकल्यात् परतनाः प्रतीयन्ते।

तत्र स्थविरात् शाकल्यात्, विशेषणशून्यात् शाकल्याच नून मयं परभवः; एतदारण्यके तदुभयोरेव नामग्रहणात्। तथाहि— "अथ शाकल्यस्य"—इत्यादि ३आ० १अ० २ख०, ततः "प्राणो वंश इति स्थविरः शाकल्यः ३आ० २अ० १ख०"—इति। किञ्चात्रैवारण्यके (३. १. ३.) श्रूयते— "पृथिव्यायतनं निर्भुजम्, दिव्या-

यतनं प्रत्यक्षम्, अन्तरेणावतन-मुभय मन्तरेण"–इति, ततस्तन्निर्भुजादिस्वरूपबोधनाय च श्रुत मिदम्— "यद्धि सन्धिं विवर्त्तयति, तन्निर्भुजस्य रूपम्; अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रतृण्णस्य; अथ उ एवोभय मन्तरेणोभयं व्याप्तं भवति"–इति। 'निर्भुजशब्दः संहितावाची, प्रतृण्णशब्दः पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्ष्यते'–इति चाह तद्भाष्ये सायणः। तदेवं पदपाठप्रादुर्भावात् क्रमपाठप्रादुर्भावाश्च परतनोऽय मत्र कोऽस्ति संशयः। पदकारस्त्वेकः शाकल्य एव। तथाहि "वने न वायो"–इति निगमव्याख्यानावसरे निर्णीत मिदं भगवता यास्केन— "वेति च य इति च चकार शाकल्यः"–इत्यादि (६. ५. ५.)। क्रमप्रवक्ता त्वभवद् 'बाभ्रव्यः'। तथाहि बह्वृक्प्रातिशाख्यम्— "इति प्र बाभ्रव्य उवाच च क्रमम्"–इति (२अ० ५प० ६व० २श्लो०)।

तदित्थ मेव सिद्धिरास ऐतरेयोऽत्यप्रचलितशाखाप्रवक्तुः शाकलाश्वलायनस्याचार्यात् शाकल्यात् प्राक्तनोऽपि पदसंहिताप्रवक्तुः शाकल्यात् परतन इति सिद्धम्॥

---

(५)।

अथेदानीं विचार्य मस्ति, कीदृश्यान्यासन् तदानीन्तनाचारव्यवहारविज्ञानानीति। तत प्रथमं तावत् तेषा माचारानालोचयितुं प्रवृत्ता वयं बहूना माचारपार्थक्यानां मूलं जातिपार्थक्य मुपलभामहे, [...] जातिपार्थक्य मेव प्रथमं समासतो दर्शयामः—

यथा गोत्वोष्ट्रत्वमनुष्यत्वादयो जातयो निसर्गजा इति आकृतिग्रहणा भवन्ति, न तथा ब्राह्मणत्वादयः ; ब्राह्मणत्वादयस्तु सामाजिकानाम् ऐहिकाभ्युदयिककार्यव्यवहारसौकर्य्याध्यात्मायुन्नतिसिद्धार्थाः पूर्वं गुणकर्मानुसारतः पूर्वसामाजिकैः कल्पिताः। तद्देशदिहापि श्रुतम्— "देवविशः कल्पयितव्या इत्याहुस्ताः कल्पमाना अनु मनुष्यविशः कल्पन्त इति"–इत्यादि १. २. ३.। तथा चाध्ययन मध्यापनं यजनं शंसनं स्तवन मुद्गानं ब्रह्मण्यं मन्त्रणादान मुपदेशदानादिकञ्चेति मुख्यानि मुखकर्माणि च येषां समाजेपूपलभ्यन्ते, तेषा मेव ब्राह्मणजातिः कल्पिता। क्षत्रियादीना मप्येवं बलादिप्रकाशकबाह्वादिभिरौपम्यं त तज्जातिकल्पनाबीजम्। तदेव श्रुत ऋक्संहितायाम् १०. ६०. १२—

"ब्राह्मणोऽस्य मुख मासीद् बाहू राजन्यः कृतः।

ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत"–इति।

एवञ्च प्राचीनतमजातिविभागाः श्रेणिविभागा एव गम्यन्ते। अत एव देवतिर्यङ्ऋङ्छिक्छन्दःस्तोममन्त्राणा मपि सर्वेषां जातिविभागाः समाम्नाताः। तद्यथा देवानाम्—

"ब्रह्म वै देवानां बृहस्पतिः"–इति तै० सं० २. २. ९. १।

एवमादिषु ब्रह्मशब्दार्थो ब्राह्मणः ; तथाहि—

"ब्रह्म हि ब्राह्मणः"–इति च श० ब्रा० ५. १. १. ११।

"अग्ने! महाएँ असि ब्राह्मण! भारत!"–इति तै० ब्रा० ३. ५. ३।

अन्यत्राप्यत्र च— "ब्रह्म ह्यग्निः"–इति श० ब्रा० १. ५. १. ११।

"ब्रह्म वै बृहस्पतिः"–इति श० ब्रा० ३. ९. १. ११.।

"तच्छ्रेयोरूप मत्यसृजत क्षत्रं, यान्येतानि क्षत्राणि ; इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति।—" स विश

यतनं प्रत्रणम्, अन्तरिक्षायतन मुभय मन्तरेण"–इति , ततस्तन्नि-र्भुजादिस्वरूपबोधनाय च श्रुत मिदम्— "यद्धि सन्धिं विवर्त्तयति, तन्निर्भुजस्य रूपम् ; अथ यच्छुद्धे अक्षरे अभिव्याहरति, तत् प्रतृ-ण्णस्य ; अग्र उ एवोभय मन्तरेणोभयं व्याप्तं भवति"–इति। 'निर्भुज-शब्दः संहितावाची; प्रत्रणशब्दः पदवाची, उभयमन्तरेणेत्यनेन क्रमो विवक्ष्यते'–इति चाह तद्भाष्ये सायणः । तदेवं पदपाठप्रादु-र्भावात् क्रमपाठप्रादुर्भावाच्च परतनोऽयं मत्र कोऽस्ति संशयः। पदकारस्त्वेकः शाकल्य एव । तथाहि "वने न वायो"–इति निगम-व्याख्यानावसरे निर्णीत मिदं भगवता यास्केन— "वेति च य इति च चकार शाकल्यः"–इत्यादि ( ६. ५. ५. )। क्रमप्रवक्ता त्वभवद् 'बाभ्रव्यः'। तथाहि बह्वृक्प्रातिशाख्यम्— "इति प्र बाभ्रव्य उवाच च क्रमम्"–इति ( २अ० ५प० ६व० २श्लो० )।

तदित्थ मेष महिदासऐतरेयोऽयमप्रचलितशाखाप्रवक्तुः शाक-लाश्वलायनस्याचार्यात् शाकल्यात् प्राक्तनोऽपि पदसंहिताप्रवक्तुः शाकल्यात् परतन इति सिद्धम् ॥

